श्रीः

# पाणिनीयधातुपाठकारिकाः

रचयिता
''पद्मश्री'' पुरस्कृतः
महामहोपाध्यायः, राष्ट्रपतिसम्मानितः
आचार्य पुल्लेल श्रीरामचन्द्रः

प्रधानसम्पादकः
आचार्य श्रीपाद सुब्रह्मण्यः
सञ्चालकः




आन्ध्रप्रदेश प्रभुत्व प्राच्यलिखित ग्रन्थालयः
परिशोधनालयश्च, हैदराबाद्
२०१३

श्रीः

# पाणिनीयधातुपाठकारिकाः


रचयिता

"पद्मश्री" पुरस्कृतः

महामहोपाध्यायः, राष्ट्रपतिसम्मानितः

**आचार्य पुल्लेल श्रीरामचन्द्रः**

प्रधानसम्पादकः

**आचार्य श्रीपाद सुब्रह्मण्यः**

सञ्चालकः





आन्ध्रप्रदेश प्रभुत्व प्राच्यलिखित ग्रन्थालयः

परिशोधनालयश्च, हैदराबाद्

2013

Pāṇinīyadhātupāṭakārikāḥ

*by*
*Padmasri Awardee, Mahamahopadhyaya*
***Prof. Pullela Sriramachandrudu***

*Chief Editor:*
**Prof. Sripada Subrahmanyam**

ISBN No. : 978-93-80379-33-3

Publication No. : 100

| | | |
|---|---|---|
| **First Edition** | : | 2013 |
| **No. of Copies** | : | 500 |
| **Price** | : | **Rs. 60/-** |



***Published by:***
A.P.Govt. Oriental Manuscripts
Library and Research Institute,
Behind O.U. Police Station,
Osmania University Campus,
Hyderabad – 500 007.
Phone : 040-27097709.

**Printed at :**
Raghavendra Graphics
Vidya Nagar, Hyderabad - 500 044.

# प्रस्तावना

भारतीयसंस्कृतिपरिरक्षणे मूलभूताः अत्यन्तं प्रधानभूताश्च प्राचीनतालपत्रग्रन्थाः, प्राचीन हस्तलिखितग्रन्थाश्च इत्यत्र न कोऽपि संशयः। ऋषिकल्पाः निस्स्वार्थमनस्काश्च अस्माकं पूर्वकालिकाः पञ्चशतवर्षेभ्यः प्रागेव अस्माकं प्राचीनसंस्कृतिः भाविकालिकानां कृते दर्शनीया, प्रदेया चेति सङ्कल्पं कृतवन्तः, योऽयं प्रयत्नः इदानीमस्माभिः परिदृश्यमानः हस्तलिखितग्रन्थरूपः। काव्य शास्त्र वैद्य वैदिक वैज्ञानिक रङ्गेषु वर्तमानाः बहवः ग्रन्थाः प्रथमतः अस्माकं हस्तलिखितग्रन्थरूपेणैव अलभन्त। मुद्रणसौकर्यरहिते पूर्वकाले गुरुपरम्परया वंशपारम्पर्येण वा ज्ञातान् विषयान् पत्रस्थं कर्तु अस्माकं पूर्वजाः महायत्नमकुर्वन्। तस्मिन् प्रयत्ने कृतकृत्यैस्तैः अस्माकं कृते ज्ञानभिक्षा प्रदत्ता इत्यत्र न कापि अतिशयोक्तिः। तेषां महात्मनां लेशतो वा ऋणापगमनाय अस्माकं सर्वेषामपि कर्तव्यमिदं वर्तते यत् तेषां हस्तलिखितग्रन्थानां समुचितरूपेण परिरक्षणं, तेषु ग्रन्थेषु निक्षिप्तामूल्यविषयज्ञानसमुपार्जनञ्च। तेषां हस्तलिखितग्रन्थानामध्ययने अधुनातनकाले देशविदेशीयाः समग्रं परिशोधनं कुर्वन्ति।

"आन्ध्रप्रदेशप्रभुत्वप्राच्यलिखितग्रन्थालयः, परिशोधनालयश्चे"तिनाम्नी इयं संस्था आन्ध्रप्रदेशप्रभुत्वसर्वकरेण 1975 संवत्सरे राष्ट्रराजधान्यां भाग्यनगर्यां स्थापिता। तेलुगु, संस्कृतम्, उर्दू, अरबिक्, पर्षियन् इत्यादिभाषासु सप्तविंशति सहस्राधिकाः हस्तलिखितग्रन्थाः अस्यां संस्थायां विराजन्ते। आधुनिकरीतिषु एते ग्रन्थाः सुरक्षिता वर्तन्ते अस्यां संस्थायाम्। देशविदेशीयाः प्रतिदिनं एतां संस्थां प्रति आगत्य परिशोधनमपि कुर्वन्ति। राष्ट्रिय पाण्डुलिपिग्रन्थ संस्थायाः (National Mission for Manuscripts, New Delhi) सहकारेण आन्ध्रप्रदेशराष्ट्रे सर्वत्र विद्यमानानां हस्तलिखितग्रन्थानां सर्वेक्षणकार्यक्रमोऽपि स्वीकृतः अनया संस्थया। एतस्याः संस्थयाः प्रधानलक्ष्येषु अन्यतमं हस्तलिखितग्रन्थानां मुद्रापणं राष्ट्रप्रभुत्वार्थिकसाहाय्येन अनया संस्थया स्वीकृतं वर्तते।

**प्रस्तुत ग्रन्थः**

पाणिनीयव्याकरणशास्त्रे भट्टोजीदीक्षितविरचितवैयाकरण सिद्धान्त-कौमुद्यां तिङन्तप्रकरणे "भू सत्तायाम्", "एध वृद्धौ" इत्यादिरीत्या भ्वादिधातवः अर्थनिर्देशपूर्वकं निर्दिष्टा वर्तन्ते। एतेषां सर्वेषां धातूनां अर्थप्रदर्शनपूर्वकं अनुष्टुप्च्छन्दसि कारिकारूपेण पद्मश्रीपुरस्कृताः, महामहोपाध्यायाः, जगत्प्रसिद्धसंस्कृतपण्डिताः आचार्य पुल्लेल श्रीरामचन्द्रुडु महाभागाः रचयामासुः। शताधिकग्रन्थकर्तारः एते महानुभावाः वेदान्तव्याकरणालङ्कारादिषु सर्वेषु शास्त्रेषु निष्णाता इति सर्वेषां विदितप्रायमेव। अत एव एतादृशं विलक्षणं बहुकष्टसाध्यं पण्डितसन्तोषजनकञ्च ग्रन्थं रचयितुं अशक्नुवन्। गद्यपाठकण्ठस्थीकरणापेक्षया, पद्यपाठकण्ठस्थीकरणं सुलभसाध्यमिति विद्यार्थिनां बहु उपकरोति अयं ग्रन्थः।

ब्रह्मश्री पद्मश्री पुल्लेल श्रीरामचन्द्रुडु महाभागानां निकटे स्वविरचित हस्तलिखितग्रन्थरूपेण अयं ग्रन्थः विराजते इति ज्ञात्वा मया एतेषां महाशयानां निकटे विज्ञापना कृता – "कृपया यद्ययं ग्रन्थः अस्मत्संस्थाकृते दीयते चेत् वयं ग्रन्थस्यास्य मुद्रापणं कुर्मः, एतच्च कार्यं संस्थायाः गौरवाय च कल्पते" इति। एते च महानुभावाः कृपया अङ्गीकृत्य मातृकामिमां अस्मत्संस्थाकृते बहूकृतवन्तः। एतदर्थं एतेषां महानुभावानां कृते धन्यवादान् वितरामि। सम्पादनकार्येऽस्मिन् सहकृतवद्भ्यः सर्वेभ्यः अस्मत्सहोद्योगिभ्यः, संस्कृतविभागे सहोद्योगिन्योः श्रीमती टि.अरुणा (परिशोधनाधिकारिणी) श्रीमती डा.पि.सीताभवानी (परिशोधनसहायिका) महाभागयोश्च धन्यवादान् वितरामि। एवं निर्दिष्टकाले मुद्रापणं कृत्वा दत्तवद्भ्यः राघवेन्द्रग्राफिक्स् महाशयेभ्योऽपि धन्यवादान् समर्पयामि। अस्मत्संस्थायाः शततम (100) ग्रन्थोऽयं पाठकानां कृते महते उपकाराय कल्पते इति विश्वसिमः।

इत्थं
निवेदयिता
**श्रीपाद सुब्रह्मण्यः**
सञ्चालकः

श्रीः

*ओम् स्वस्ति श्रीगणेशाय नमः*

# किंचिद् वक्तव्यम्

अनादेः कालात् जगति लब्धप्रतिष्ठायाः गैर्वाण्याः वाण्याः, अनन्तशब्दभाण्डागारभूतायाः प्रामाणिकं रूपम् अल्पाक्षराणां सूत्राणां चतुःसाहस्र्या सम्यङ् निरूपयितुमुद्यतः तत्रभवान् पाणिनिः आत्मना निर्मिमित्सितस्य शब्दानुशासनस्याङ्गतया, प्रायः द्विसहस्रसंख्याकानां धातूनां गणमपि पपाठ; यस्यैव 'पाणिनीयधातुपाठ' इति विद्वल्लोके प्रथितिः। धातुपाठपठितानां कतीनांचिद्धातूनामर्थाः भगवता पणिनसूनुनैव निर्दिष्टाः। परं तु अद्यत्वे उपलभ्यमानाः धातूनामर्थाः अर्वाचीनैः कैश्चिद् बुधैर्योजिता इति आशेरते केचित् शाब्दिकाः। अत एवाहुः वासुदेवदीक्षिताः बालमनोरमायाम् - ''पाणिनिर्हि धातुपाठे धातून् कांश्चित् अर्थसहितान् कांश्चिदर्थरहितान् पठतीति 'चुटू' इति सूत्रभाष्ये स्थितम्। न चातिप्रसङ्गः शङ्क्यः; 'अनेकार्था अपि धातवो भवन्ति' इति भाष्ये अपिशब्देन प्रयोगानुसारितावगतेः। सर्वेषु धातुषु अर्थनिर्देशस्तु आधुनिकः'' (भूधातुप्रक्रियायाः अन्ते बालमनोरमा)। धातूनामर्थनिर्देशकः भीमसेनाख्यः कश्चिद्वैयाकरणः इति तत्त्वबोधिन्यां श्रीमता ज्ञानेन्द्रभिक्षुणा सूचितम् - ''एतच्च सत्ताद्यर्थनिर्देशं कृतवतो भीमसेनस्यापि संमतम् .............'' (तत्त्वबोधिनी - तत्रैव)। वस्तुतः 'चुटू' इति सूत्रस्य भाष्ये नैवास्ति वासुदेवदीक्षितोक्तं वाक्यम्। कैयटकृतस्य प्रदीपस्य व्याख्यायाम् उद्द्योताख्यायाम् अयं भावः नागेशभट्टेनोद्घाटितः ''एतद्भाष्यात् केषांचिध्दातूनाम् अर्थनिर्देशसहितोऽपि पाठः इति ज्ञायते'' इति। (उद्द्योतः पा.सू.१-३-७)

यद्ययं सार्थः धातुपाठः श्लोकैर्निबध्यते तदा धातुपुष्टिं समधिजिगमिषुभिः पाणिनीयाध्येतृभिः कण्ठस्थीकर्तुं शक्यते इति धिया बहोः कालात् पूर्वमेव निर्मिताः धातुपाठकारिकाः कुड्यपेटिकायाम् असूर्यपश्याः शेरते स्म। ताः प्रबोध्य बहिः आनयति अद्य, आन्ध्रप्रदेशप्रभुत्वप्राच्यलिखितग्रन्थालयः, तन्निदेशकाः आचार्य श्रीपाद सुब्रह्मण्यमहाभागाश्चेति मोमुदीति नितरां नश्चेतः। तेषु कार्तज्ञ्यमाविष्कुर्मः।

प्रायः धातुपाठगता एवार्थाः कारिकासु यथातथं निबद्धाः। कतिषुचिदेव श्लोकेषु ''अपि माषं मषं कुर्यात् छन्दोभङ्गं न कारयेत्'' इति न्यायेन पदानां किञ्चित् परिवृत्तिः कृता, न तु अर्थानाम्। पण्डितप्रवरेण अमरसिंहेन नामलिङ्गानुशासने या रीतिः ''त्वन्ताथादि न पूर्वभाक्'' इति अनुसृता, तथैव रीत्या धातूनां निर्देशः कृतः कारिकासु। अतश्च 'तु' 'अथ' शब्दप्रयोगः पूर्वोक्तधातोः भिन्नस्य धातोः परिग्रहं सूचयति।

आशास्महे ''कालो ह्ययं निरवधिर्विपुला च पृथ्वी'' इति भवभूतिवचोऽनुरुद्ध्य, कदापि वा, कुत्रापि वा, कैश्चिदपि वा, पाणिनिसूत्रवत् प्रमाणे लघुतरोऽपि, संप्रदायिकत्वात् प्रामाण्ये गुरुतरः अयं ग्रन्थः आद्रियेतेति।

हैदराबाद्
18-12-2013

**पुल्लेल श्रीरामचन्द्रः**

# अनुक्रमणिका

श्रीः

ओम् स्वस्ति श्रीगणेशाय नमः

# पाणिनीयधातुपाठकारिकाः

## अथ भ्वादिगणः शब्विकरणः

येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।।

येन धौता गिरः पुंसां विमलैः शब्दवारिभिः।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः।।

वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम्।
पाणिनिं सूत्रकारं च प्रणतोऽस्मि मुनित्रयम्।।

ओँ नमः पाणिनिकात्यायनपतञ्जलिभ्यः शब्दविद्या-
संप्रदायकर्तृभ्यः नमो महद्भ्यो गुरुभ्यः।।

१. स्मृत्वाचार्यपदाम्भोजं नत्वा साम्बं सदाशिवम्।
श्लोकैर्निबध्यते धातुपाठः श्रीपाणिनेर्मुनेः।।

## भ्वादयः

२. धातुप्रत्यययोर्मध्ये भ्वादीनां 'शब्' विधीयते।
अतोऽयं शब्विकरणधातूनां गण उच्यते।।

### एकः परस्मैपदधातुः

३. 'भू' सत्तायामयं धातुः परस्मैभाष ईरितः। १
एधादयो मताः त्वन्ताः षट्त्रिंशत्त्वात्मनेपदाः।।
त्वन्ताः = तवर्गीयान्ताः

### षट्त्रिंशत् (३६) आत्मनेपदिनः

४. **एध** वृद्धौ मतः **स्पर्ध** संघर्षे संप्रकीर्तितः। ३
प्रतिष्ठालिप्सयोर्ग्रन्थे **गाधृ** **बाधृ** विलोडने।। ५

५. **नाथृ** याच्ञोपतापैश्वर्याशीःष्वत्रैव **नाधृ** च। ७
धारणे तु **दध** प्रोक्तः **स्कुदि** आप्रवणे मतः।। ९

६. **श्विदि** श्वैत्ये **वदि** अभिवादनस्तुतिवाचकः। ११
**भदि** कल्याणसुखयोरर्थयोः परिकीर्तितः।। १२

७. **मदि** स्तुतिमोदमदस्वप्नकान्तिगतिष्वथ। १३
**स्पदि** किंचिच्च चलने; **क्लिदि** संपरिदेवने।। १५

८. **मुद** हर्षे; **दद** दाने; **ष्वद** आस्वादने स्मृतः। १८
**स्वर्द** चास्वादने मानक्रीडयोः **उर्द** ईरितः।। २०

९. **कुर्द खुर्द गुर्द गुदाः** क्रीडायां धातवो मताः। २४
**षूद** तु क्षरणे; **ह्राद** अव्यक्ते शब्द ईरितः।। २६

१०. **ह्लादी** सुखे तु संप्रोक्तः; **स्वाद** आस्वादने मतः। २८
शब्दे तु कुत्सिते **पर्द**; **यती** प्रयतने मतः।। ३०

११. भासने स्याद् **युतृ जुतृ**; **विथृ वेथृ** च याचने। ३४
शैथिल्ये **श्रथि**; कौटिल्ये **ग्रथि** प्रोक्तोऽथ **कत्थ** तु।। ३७

१२. श्लाघायां प्रोच्यतेऽ**ताद्यास्तवर्गीयान्तधातवः**।
**अष्टात्रिंशदिमे सर्वे परस्मैपदिनो मताः**।।
इमे = वक्ष्यमाणाः

## अष्टात्रिंशत् (३८) परस्मैपदिनः

१३. **अत** सातत्यगमने; **चिती** संज्ञान एव च। ३९
**च्युतिर्** आसेचने प्रोक्तः **श्च्युतिर्** वा क्षरणे **श्चुतिर्**।। ४१

१४. विलोडने **मन्थ**; **कुथि** हिंसासंक्लेशनार्थयोः। ४३
**पुथि लुथि मथि** प्रोक्ताः हिंसासंक्लेशनार्थकाः।। ४६

१५. **षिध** गत्यां; **षिधू** शास्त्रे माङ्गल्ये च प्रकीर्तितः। ४८
भक्षणे **खादृ**; हिंसायां स्थैर्ये च **खद** ईरितः।। ५०

१६. **बद** स्थैर्ये; वाचि **गद** व्यक्तायां; **रद** लेखने। ५३
**णद** शब्दे मतोऽव्यक्ते; गतौ **अर्द** च याचने।। ५५

१७. **नर्द गर्द** च शब्दे स्यात्; हिंसायां **तर्द** ईरितः। ५८
**कर्द** कुत्सितशब्देऽथ **खर्द** स्यात् दन्दशूकके।। ६०

१८. बन्धनार्थौ **अति अदि**; ऐश्वर्ये परमे **इदि**। ६३
**बिदि** त्ववयवे यद्वा **भिदि** प्रोक्तस्तदर्थकः।। ६४

१९. वदनस्यैकदेशे स्याद् **गडि**; कुत्सार्थको **णिदि**। ६६
समृध्दौ तु **नदि** प्रोक्तो; दीप्त्याह्लादद्वये **चदि**।। ६८

२०. चेष्टार्थः **त्रदि**; आह्वाने रोदने च **कदि क्रदि**। ७१
तत्रैवार्थे **क्लदि** प्रोक्तः; **क्लिदि** स्यात् परिदेवने।। ७३

२१. **शुन्ध** शुद्धाविति **प्रोक्ता अष्टात्रिंशत्तु धातवः**। ७४
**आत्मनेपदिनोऽक्ष्यब्धिमिताः(४२) शीक्रादयस्त्विमे**।।

**द्विचत्वारिंशत् (४२) आत्मनेपदिनः**

२२. सेचने **शीकृ** वा **सीकृ**; दर्शने **लोकृ** संमतः। ७६
संघाते **श्लोकृ**; शब्दोत्साहार्थौ **द्रेकृ** च **ध्रेकृ** च।। ७९

२३. शङ्कायां **रेकृ**; गमने **सेकृ स्रेकृ स्रकि श्रकि**। ८४
**श्लकि** चाप्यथ **शकि** तु शङ्कायाम्; **अकि** लक्षणे।। ८७

२४. **कौटिल्ये** तु **ककि** प्रोक्तः मण्डने **मकिरी**रितः। ८९
**कक** लौल्ये; **कुक**ादाने; **वृक** चादान ईरितः।। ९२

२५. **चक** तृप्तौ प्रतीघाते; गतौ **ककि वकि श्वकि**। ९६
**स्वकीत्येके त्रकि** गतौ; **ढौकृ** च **त्रौकृ ष्वष्क** च।। १००

२६. **ष्वक्केत्येके वस्क मस्क टिकृ टीकृ** गतौ **तिकृ**। १०५
**तीकृ** चापि **रघि लघि** गत्यर्था दश पञ्च च।। १०८

२७. अभोजने चापि **लघि**; गतौ **अघि वघि मघि**। १११
गत्यारम्भे तदाक्षेपेऽप्येते; **मघि** च कैतवे।।

२८. **राघृ लाघृ द्राघृ** मताः सामर्थ्ये **ध्राघृ** केचन। ११४
आयामेऽपि तु **द्राघ्रु** स्यात् कत्थने **श्लाघृ** संमतः।। ११५

२९. **फक्कादयस्तु पञ्चाशत् कवर्गीयान्तधातवः।**
**परस्मैपदिनः प्रोक्ताः तत्तदर्थप्रबोधिनः।।**

३०. **फक्क** नीचैर्गतौ प्रोक्तः; हसने च **तक** स्मृतः। ११७
**तकि** स्याज्जीवने कृच्छ्रे; भषणे **बुक्क** ईरितः।। ११९

३१. **कख** हासे शोषणालमर्थयोः **ओखृ राखृ** च। १२२
**लाखृ द्राखृ ध्राखृ** चापि पूर्वोक्तार्थास्त्रयः स्मृताः।। १२५

३२. **शाखृ श्लाखृ** द्वयं **व्याप्तौ**; गतौ **उख उखि** स्मृतौ। १२९
**वख वखि मख मखि णख णखि रख रखि**।। १३७

३३. **लख लखि इख इखि ईखि वल्ग रगि लगि**। १४५
**अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि**।। १५३

३४. **रिगि लिग्य**पि गत्यर्था धातूनामष्टविंशतिः।। १५५
**रिख रिखि लिख लिखि त्रख त्रिखि शिखी**त्यपि।

३५. केचित् पठन्ति; **त्वगि** च कम्पनेऽपि प्रकीर्तितः।
वर्जने **युगि जुगि बुगि**; हसने तु **घघ** स्मृतः।। १५९

३६. मण्डने तु **मघि** प्रोक्त आघ्राणे **शिघि**रीरितः। १६१
(पालने **दघि लघि** तु शोषणे; मूल्य **अर्घ** तु।।)

**एकविंशतिः (२१) आत्मनेपदिनः**

३७. **एकविंशति संख्याकाश्चवर्गीयान्तधातवः।**
**वर्चादयोऽद्य पठ्यन्ते आत्मनेपदयोगिनः।।**

३८. **वर्च** दीप्तौ; **षच** प्रोक्तः सेचने सेवनेऽपि च। १६३
लोचने **लोचृ**; **शच** तु व्यक्तायां वाचि कीर्तितः।। १६५

३९. **श्वच श्वचि** गतौ प्रोक्तौ बन्धने तु **कच** स्मृतः। १६८
दीप्तिबन्धनयोश्चैव **काचि कचि** द्वयं स्मृतम्।। १७०

४०. **मच्च** **मुचि** कल्कने वा बन्धने; **मचि** धारणे। १७३
उच्छ्राये पूजने, चाथ **पचि** व्यक्तीकृतौ स्मृतः। १७४

४१. **ष्टुच** प्रसादे **ऋज** तु गतौ स्थानेऽर्जने तथा। १७६
उपार्जने;ऽप्यथ **ऋजि** **भृजी** स्यातां तु भर्जने।। १७८

४२. **एजृ** **भ्रेजृ** **भ्राजृ** दीप्तौ **ईज** स्यात् कुत्सने गतौ। १८२
**परस्मैपदिनोऽथेमे व्रज्यन्ताश्च द्विसप्ततिः।।**

**द्विसप्ततिः (७२) परस्मैपदिनः**

४३. शोके **शुच** स्यात्तारे तु शब्दे **कुच** समीरितः। १८४
कौटिल्याल्पीभावयोश्च **कुञ्च** **क्रुञ्च** द्वयं स्मृतम्।। १८६

४४. **लुञ्चापनयनेऽथाञ्चु** गतिपूजनयोः स्मृतः। १८८
**वञ्चु** **चञ्चु** **तञ्चु** **त्वञ्चु** **मुञ्चु** **म्लुञ्चु** **म्रुचु** **म्लुचु**।। १९६

४५. गत्यर्थाः; स्तेयकरणे **ग्रुचु** **ग्लुचु** **कुजु** **खुजु**। २००
**ग्लुञ्चु** **षस्ज** गतौ; शब्देऽव्यक्ते **गुजि** समीहितः।। २०३

४६. **आत्मनेपद्यपि प्रोक्तः षस्ज केश्चन शाब्दिकैः।**
पूजायाम**र्च**; शब्दे स्यादव्यक्ते **म्लेच्छ**; लक्षणे।। २०५

४७. **लछ**, **लाछि**; अथेच्छायां **वाछि**; आयाम **आछि** च। २०९
लज्जायां **ह्रीच्छ**; कौटिल्ये **हुर्छा** तु परिकीर्तितः।। २११

४८. **मुर्छा** मोहे समुऽच्छ्राये;ऽप्यथ **स्फुर्छा** तु विस्तृतौ। २१३
**युच्छ** प्रमादे, उञ्छे तु **उछि**; **उच्छी** विवासने। २१६

४९. **ध्रज ध्रजि धृज धृजि ध्वज ध्वजि ध्रिजा** गतौ। २२३
**कूजा**व्यक्ते तु शब्दे स्यात्; **अर्ज षर्जा**र्जने मतौ।। २२६

५०. **गर्ज** शब्दे; भर्त्सने स्यात् **तर्ज**; **कर्ज** व्यथार्थकः। २२९
**खर्ज** स्यात् पूजने;ऽ**थाज** गतिक्षेपणयोर्मतः।। २३१

५१. पालने **तेज**; मन्थे तु **खज** धातुः समीरितः। २३३
मदे **कज** इति प्राहुः केचिदन्येऽत्र शाब्दिकाः।।

५२. खजि स्याद् गतिवैकल्ये; **एजृ** कम्पन ईरितः। २३५
**टु ओ स्फूर्जा** वज्रघोषे; **क्षि** क्षये परिकीर्तितः।। २३७

५३. **क्षीजा**व्यक्ते तु शब्दे स्यात्; भर्त्सने स्यात् **लज लजि**। २४०
भर्जनार्थो **लाज लाजि**; युध्दे **जज जजि** स्मृतौ।। २४४

५४. हिंसायां **तुज**; **तुजि** तु पालने;ऽथ **गज गजि**। २४७
**गृज गृजि मुज मुजि** शब्दार्थाः परिकीर्तिताः।। २५२

५५. **गज** स्यान्मदनार्थेऽपि **वज व्रज** गतौ स्मृतौ। २५४

## षट्त्रिंशत् (३६) आत्मनेपदिनः

**षट्त्रिंशत्संख्ययाट्टाद्याः टवर्गीयान्तधातवः।।**

५६. **आत्मनेपदिनः प्रोक्ताः उदात्तेतो मनीषिभिः।**
**अट्ट** अतिक्रमहिंसार्थः; वेष्टने **वेष्ट; चेष्ट** तु।। २५७

५७. चेष्टाया;मथ संघाते **गोष्ट लोष्ट** स्मृतावुभौ। २५९
चलने **घट्ट** तु प्रोक्तः; स्मृतो विकसने **स्फुट**।। २६१

५८. गतावप्येकचर्यायां **वठि**; शोके **मठि कठि**। २६४
पालने **मुठि; हेठ** स्याद्विबाधायां त**थैठ** च। २६७

५९. गत्यनादरयोः **हिडि; हुडि** संघात ईरितः। २६९
**कुडि** दाहे; **वडि मडि** विभाजन उदाहृतौ। २७२

६०. **भडि** परिभाषणे स्यात्; संघाते तु **पिडि** स्मृतः। २७४
मार्जने **मुडि; तुडि** तु तोडने; वरणे **हुडि**।। २७७

६१. हरणेऽन्यैः **हुडि** प्रोक्तः विकासे **स्फुडि**रीरितः।
कोपे **चडि**; रुजायां च कोपे **शडि** समीरितः।। २७९

६२. ताडने **तडि; पडि** तु गतौ; **कडि** मदे स्मृतः। २८२
**खडि** मन्थे; **हेडृ होडृ** अनादर उदाहृतौ।। २८५

६३. आप्लाव्ये **बाढृ** तु; **द्राढृ** **ध्राढृ** स्यातां विशरणे। २८८
श्लाघायां **शाढृ** गदितः **आत्मनेपदिनो गताः**।। २८९

**त्रिसप्ततिः (७३) परस्मैपदिनः**

६४. **आटवर्गीयान्तपूर्ति परस्मैपदिनः स्मृताः**।
**शौटृ** गर्वे **यौटृ** बन्धे; उन्मादे **म्लेटृ** **म्रेटृ** च।। २९३

६५. **कटे** वर्षावरणयोः, **चटे** इति तु केचन। २९४
गतौ **अट** **पट** प्रोक्तौ **रट** स्यात् परिभाषणे।। २९७

६६. **लट** बाल्येऽथ **शट** तु रुजाविशरणार्थयोः। २९९
अर्थद्वयेऽयमन्यस्मिन् गतावप्यवसादने।

६७. वेष्ट्यां **वट**; **किट** **खिट** त्रासे; **शिट** **षिटौ** अथ। ३०४
अनादरे; **जट** **झट** संघातेऽथ भृतौ **भट**।। ३०७
वेष्टयाम् = वेष्टने।

६८. **तटो**(तट+उ)च्छ्राये;ऽथ काङ्क्षायां **खट**; नृत्तौ **णट** स्मृतः। ३१०
शब्दसंघातयोः **पिट**; दीप्तावथ **हट** स्मृतः।। ३१२

६९. **षट** चावयवे प्रोक्तः; विलोडने **लुट** **लुड**। ३१५
परप्रेष्ये **चिट**; **विट** शब्देऽथ **बिट** वा **हिट**।। ३१८

७०. आक्रोशे स्याद्; **इट किट कटी** च गतिवाचकाः। ३२१
भूषायां **मडि**; वैकल्ये **कुडि** वा **कुटि**; मर्दने।। ३२३

७१. **मुड प्रुडापि** गदितौ; अल्पीभावे **चुडि** स्मृतः। ३२५
खण्डने **मुडि पुड्येके**; स्तेये **रुटि लुटि** स्मृतौ।। ३२९

७२. पठन्त्येके **शठि लुठि**, परे **रुडि लुडीति** च।
**स्फुटिर्** विशरणे, केचित् **स्फुटि** धातुमिमं जगुः।। ३३०

७३. व्यक्तायां वाचि तु **पठ**; **वठ** स्थौल्ये प्रकीर्तितः। ३३२
मदे निवासे च **मठ**; **कठ** स्यात् कृच्छ्रजीवने।। ३३४

७४. **रट** यद्वा **रठ** परिभाषणे; **हठ** तु प्लुतौ। ३३६
शठत्वे वा बलात्कारेऽप्येष धातुः प्रकीर्तितः।।

७५. उपघाते **रुठ लुठ उठ ऊठेति** केचन। ३३९
**पिठ** हिंसाक्लेशनयोः; कैतवे **शठ** तु स्मृतः।। ३४१

७६. प्रतिघाते गतेः **शुठ** तथा **कुठि शुठि** स्मृतौ। ३४४
आलस्ये प्रतिघाते च **लुठि** स्यात्; **शुठि** शोषणे।। ३४६

७७. गतौ **रुठि लुठी**; भावकरणे **चुड्ड** तु स्मृतः। ३४७
**अड्डा**भियोगे; कार्कश्ये **कड्ड** धातुः प्रकीर्तितः।। ३५१

७८. विहारे स्यात् **क्रीड़्**; **तुड़्** तोडने, **तूड़्** केचन। ३५३
**हुड़्** **हूड़्** **होड़्** गतौ; **रौड़्** तु स्यादनादरे।। ३५७

७९. उन्मादे स्याद् **रोड़्** **लोड़्**; **अड** इत्युद्यमे मतः। ३६०
विलासे **लड** **लल** वा; मदे स्यात् **कड** वा **कडि**।। ३६२

८०. वदनस्यैकदेशे स्यात् **गडि**; ट्वन्ता इतीरिताः। ३६३

## चतुस्त्रिंशत् (३४) आत्मनेपदिनः

**प्वन्ता अथात्मनेभाषाश्चतुस्त्रिंशत्तु धातवः।।**

ट्वन्ताः = टवर्गीयान्ताः। प्वन्ताः = पवर्गीयान्ताः

८१. **तिपृ** **तेपृ** **ष्टिपृ** **ष्टेपृ** क्षरणार्थाः प्रकीर्तिताः। ३६५
**ग्लेपृ** दैन्ये; **टु वेपृ** स्यात् कम्पने; **केपृ** **गेपृ** च।। ३६९

८२. **ग्लेपृ** चेमे त्रयः प्रोक्ता गतावपि च कम्पने। ३७०
**मेपृ** **रेपृ** **लेपृ** गतौ; **त्रपूष्** लज्जार्थको मतः।। ३७४

८३. चलने **कपि**; **रबि** **लबि**, **अबि** शब्दे प्रकीर्तिताः। ३७८
अर्थेत्ववस्रंसनेऽपि **लबि** धातुः प्रकीर्तितः।।

८४. **कबृ** वर्णे; **क्लीबृ** धातुरधार्ष्ट्ये; **क्षीबृ** स्यान्मदे। ३८१
विकत्थने **शीभृ** **चीभृ**; **रेभृ** शब्दे प्रकीर्तितः।। ३८४

८५. **अभि रभी लभि** तथा पठयन्ते सूरिभिः क्वचित्। ३८७
प्रतिबन्धे **ष्टभि स्कभि**; गात्रनामे **जभी जृभि**।। ३९१

८६. कत्थने **शल्भ**; **वल्भ** स्याद् भोजने; **गल्भ** धाष्टर्यके। ३९१
प्रमादे **श्रम्भु** वा **स्रम्भु**; **ष्टुभु** स्तम्भे प्रकीर्तितः।। ३९७

**सप्तत्रिंशत् (३७) परस्मैपदिनः**

८७. **सप्तत्रिंशदिमे ज्ञेयाः परस्मैपदिधातवः।**
**गुपू** स्याद्रक्षणे; **धूप** संतापे **जप जल्प** तु।। ४००

८८. व्यक्तायां वाचि; **जप** च मानसे; **चप** सान्त्वने। ३९९
समवाये **षप**; **रप** व्यक्तायां वाचि संस्मृतः ४०१

८९. व्यक्तायां वाचि **लप** च; मन्दायां तु गतौ **चुप**। ४०३
**तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ** च हिंसने। ४०९

९०. **त्रुफ त्रुम्फापि** हिंसायाम्; अथ गत्यर्थकास्त्विमे। ४११
**पर्प रफ** च **रफ्यर्ब(रफि+अर्ब) पर्ब लर्ब** च **बर्ब** च।।४१८

९१. **मर्ब कर्ब खर्ब गर्ब शर्ब षर्ब** च **चर्ब** च। ४२५
**कुबि** त्वाच्छादनार्थः स्यात्; **लुबि तुब्यर्दने** मतौ।। ४२८

९२. **चुबि** स्याद्वक्त्रसंयोगे; **षृभु षृम्भु** च हिंसने। ४३२
पठन्त्येके **षिभु षिभि** धातू हिंसनवाचकौ।।

९३. भाषणे वा भासने वा हिंसायां **शुभ शुम्भ** च। ४३४

**दश (१०) आत्मनेपदिनः**

**अथानुनासिकान्ताः स्युरात्मनेपदिनो दश॥**

९५. ग्रहणे **घिणि घुणि घृणि**; भ्रमणे **घुर्ण घूर्ण** च। ४३९
**पण** स्याद् व्यवहारे च स्तुतौ च; **पन** तु स्तुतौ॥ ४४१

९५. क्रोधे स्याद् **भाम**; सहने **क्षमूष्**; कान्तौ **कमु** स्मृतः। ४४४

**त्रिंशत् (३०) परस्मैपदिनः**

**परस्मैपदिनस्त्रिंशत् क्रम्यन्ता अथ धातवः॥**

९६. **अण रण वण भण मण कण क्वण व्रण**। ४५३
**भण ध्वण** च शब्दार्था **धणा**पीच्छान्ति केचन। ४५५

९७. स्यादोणृ (ओणृ) चापनयने; वर्णगत्योस्तु **शोणृ** च। ४५७
संघाते **श्रोणृ** च **श्लोणृ**; **पैणृ** वा **प्रैणृ** वा गतौ॥ ४६०

९८. प्रेरणे शोषणे चोक्तः; शब्दे तु **ध्रन** ईरितः। ४६१
केचिदाहुर्**बण** इति; दीप्तौ कान्तौ गतौ **कन**॥ ४६३

९९. शब्दे स्यातां **ष्टन वन**; संभक्तौ च **वन षन**। ४६७
**अम** गत्यां तथा शब्दसंगत्योरपि च स्मृतः॥ ४६८

१००. **द्रम हम्म मीमृ** गतौ; **मीमृ** शब्देऽपि कीर्तितः। ४७१
**चमु छमु जमु झमु** चादने; **जिमु** केचन।। ४७५

१०१. **क्रमु** स्यात् पादविक्षेपे; धातवोऽथात्मनेपदे। ४७६

**पञ्चत्रिंशत् (३५) आत्मनेपदिनः**

**अय वय पय मय चय** तय णय गतौ।। ४८३

१०२. **दय** दाने गतौ रक्षाहिंसादानेषु च स्मृतः। ४८४
गतौ **रय लया;वूयी (ऊयी)** तन्तुसंतानवाचकः।। ४८७

१०३. **पूयी** विशरणे तद्वद्दुर्गन्धे समुदाहृतः। ४८८
**क्नूयी** शब्दे चोन्दने च; **क्ष्मायी** तु स्याद् विधूनने।। ४९०

१०४. वृध्दौ **स्फायी च ओ प्यायी**; सन्ताने **तायृ** पालने। ४९३
**शल** चलनसंवृत्योः; **वल** वल्ल च संवृतौ।। ४९६

१०५. तथा संचरणे स्यातां; **मल** मल्ल तु धारणे। ४९८
**भल भल्ल** च हिंसायामादाने परिभाषणे।। ५००

१०६. शब्दसंख्यानयोः प्रोक्तः **कल** धातुर्मनीषिभिः। ५०१
शब्देऽव्यक्ते **कल्ल; तेवृ देवृ** स्यातां तु देवने।। ५०४

१०७. **षेवृ गेवृ ग्लेवृ पेवृ मेवृ म्लेवृ** च सेवने। ५१०
**शेवृ सेवृ क्लेवृ** इति पठन्त्येके तु शाब्दिकाः।।

१०८. **रेवृ** तु स्यात् प्लवगतौ **आत्मनेपदिनो गताः**। ५११
**अथैकनवतिश्चेमे परस्मैपदिधातवः**।

**एकनवतिः (९१) परस्मैपदिनः**

१०९. बन्धने **मव्य; सूक्ष्येर्क्ष्य चेर्ष्य** ईर्ष्यार्थका मताः। ५१५
गतौ **हय;** अभिषवने **शुच्य; चुच्येति** केचन।। ५१७

११०. **हर्य** धातुस्तु गदितो गतिकान्त्यर्थयोर्द्वयोः। ५१८
**अल** भूषणपर्याप्तिवारणेषु प्रकीर्तितः।। ५१९

१११. **ञि फला** स्याद्विशरणे; **मील शील** निमेषणे। ५२२
**स्मील क्ष्मीलापि** तत्रैव; प्रतिष्टम्भेऽथ **पील** च।। ५२५

११२. **णील** वर्णे; समाधौ स्यात् **शील; कील** तु बन्धने। ५२४
**कूल** त्वावरणे; **शूल** रुजासंघोषयोर्मतः।। ५२८

११३. निष्कर्षे **तूल;** संघाते **पूल; मूल** प्रतिष्ठितौ। ५३१
निष्पत्तौ **फल;** भावाविष्करणे **चुल्ल** ईरितः।। ५३३

११४. विकासे **फुल्ल;** शैथिल्ये **चिल्ल** भावनिवेदने। ५३५
**तिलाथवा तिल्ल** गतौ; **वेलृ चेलृ** च **केलृ** च।। ५४०

१९५. **खेलृ क्ष्वेलृ** तथा **वेल्ल** चलनेऽमी प्रकीर्तिताः। ५४३
**पेलृ फेलृ शेलृ** गतौ; षेलृ कैश्चित्तु पठ्यते।। ५४६

१९६. **स्खल** तु स्यात् संचलने; संचये **खल** ईरितः। ५४८
**गलादने**; **षल** गतौ; भवेद्विशरणे **दल**।। ५५१

१९७. **श्वल श्वल्लाशुगमने**; **खोलृ खोर्ऋ** गतिक्षतौ। ५५५
**धोर्ऋ** स्याद् गतिचातुर्ये **त्सर** च्छद्मगतौ मतः।। ५५७

१९८. हूर्छने **क्मर**; गत्यर्था **अभ्र वभ्र मभ्र चर**। ५६२
भक्षणेऽपि **चर** प्रोक्तः; स्मृतो निरसने **ष्ठिवु**।। ५६३

१९९. **जि** जये; जीव तु प्राणधारणे धातुरीरितः। ५६५
**पीव मीव तीव णीव** स्थौल्यार्था धातवः स्मृताः।। ५६९

१२०. **क्षीवु क्षेवु** निरसने; **चोर्वी (उर्वी) तुर्वी** तु हिंसने। ५७३
**थुर्वी दुर्वी** च **धुर्वी** च हिंसार्थाः परकिीर्तिताः।। ५७६

१२१. **गुर्वी** चोद्यमने; **मुर्वी** बन्धने; **पुर्व** पूरणे। ५७९
पूरणे **पर्व मर्व** स्याद्; अदने **चर्व** कीर्तितः। ५८२

१२२. हिंसायां **भर्व**; दर्पे स्युः **कर्व खर्व** च **गर्व** च। ५८६
**अर्व शर्व** तथा **षर्व** हिंसायां; व्यापने **त्विवि (इवि)**।। ५९०

१२३. सेचनेऽर्थे **पिवि मिवि णिवि** वा **षिवि** वा स्मृताः। ५९२
**प्रोक्तास्ते** सेवने कैश्चित्; **हिवि दिवि धिवि जिवि**।। ५९६

१२४. प्रीणने; **रिवि रवि धवि** गत्यर्थाः परिकीर्तिताः। ५९९
**कृवि** हिंसाकरणयोः गतौ स्वादिषु च संमतः।। ६००

१२५. बन्धने **मव** धातुः स्यादव रक्षण ईरितः। ६०२
गतिकान्तिप्रीतितृप्तिप्रवेशावगमेष्वपि।।

१२६. स्वाम्यर्थे श्रवणे चैव क्रियायां याजने तथा।
इच्छायां दीप्त्यवाप्त्योश्चालिङ्गनादानवृद्धिषु।।

१२७. भागेऽपि चाथ हिंसायाम**व**धातुः प्रकीर्तितः।
**धावू** (वु+उ) भयपदी धातुर्गतौ शुद्धौ च संमतः।। ६०३

## एकपञ्चाशत् (५१) आत्मनेपदिनः

१२८. **धातवोऽथात्मनेभाषा एकपञ्चाशदीरिताः।**
सन्दीपने क्लेशने च जीवने **धुक्ष धिक्ष** च।। ६०५

१२९. वरणे **वृक्ष**; विद्योपादाने **शिक्ष** च; **भिक्ष** तु। ६०८
भिक्षायामप्यलाभे च लाभे च परिकीर्तितः।।

१३०. अव्यक्तवाचि **क्लेश** स्यात्; बाधने इति केचन। ६०९
**दक्ष** वृद्धौ च शीघ्रार्थे; **दीक्ष** मौण्ड्ये व्रते तथा।। ६११

१३१. इज्योपनयनादेशनियमेषु च कीर्तितः।
**ईक्ष** स्याद्दर्शने; **त्वीष (ईष)** दर्शने गतिहिंसयोः।। ६१३

१३२. व्यक्तायां वाचि **भाष** स्यात्; स्नेहने **वर्ष** ईरितः। ६१५
अन्विच्छायां **गेषृ ग्लेषृ** वा; प्रयत्नेऽथ **पेषृ** च।। ६१८

१३३. **जेषृ पेषृ** तथा **चैषृ (एषृ) प्रेषृ** गत्यर्थका मताः। ६२२
वृकशब्दे **रेषृ** मतो **हेषृ ह्रेषृ**श्वशब्दने।। ६२२

१३४. शब्दकुत्सार्थकः **कासृ**; दीप्तौ **भासृ** प्रकीर्तितः। ६२४
शब्दे **णासृ** तथा **रासृ**; कौटिल्ये तु मतो **णस**।। ६२७

१३५. भये **भ्यस**; आङः **शासि** तु इच्छार्थः परिकीर्तितः। ६२९
अदने **ग्रसु** च **ग्लसु** चेष्टाया**मीह** ईरितः।। ६३२

१३६. वृद्धौ **वहि महि** प्रोक्तौ; गता **वहि(अहि)** तु कीर्तितः। ६३५
**गर्ह गल्ह** च कुत्सायां; प्राधान्ये **बर्ह बल्ह** च।। ६३९

१३७. हिंसाच्छादनयोर्**वर्ह वल्हौ** च परिभाषणे। ६४१
गतौ **प्लिह**; प्रयत्ने तु **वेहृ जेहृ** च **बाहृ** च।। ६४५

१३८. गत्यर्थेऽपि च **जेहृ** स्याद्**द्राहृ** निद्राक्षयेऽथवा। ६४७
निक्षेपे; **काशृ** दीप्तौ स्यात्; वितर्के **ऊह** ईरितः।। ६४९

१३९. **गाहू** विलोडनेः **गृहू** ग्रहणे, **ग्लह** च स्मृतः। ६५२
**घुषि** वा **घुष** वा कान्तिकरणे संप्रकीर्तितः।। ६५३

## अष्टाशीतिः (८८) परस्मैपदिनः

१४०. **अथाष्टाशीतिसंख्याकाः परस्मैपदिधातवः।**
शब्देऽविशब्दने वा स्याद्; **घुषिरक्षू** तु(घुषिर्+अक्षू)व्यापने।। ६५५

१४१. स्यात्तनूकरणे **तक्षू त्वक्षू चोक्षा (उक्ष)** थ सेचने। ६५८
पालने **रक्ष**; **णिक्ष** स्याच्चुम्बनेऽथ गतौ मताः।। ६६०

१४२. **त्रक्ष ष्ट्रक्ष तृक्ष ष्टृक्ष णक्षाः**; संघातरोषयोः। ६६५
**वक्ष** स्यात्; **मृक्ष** वा **म्रक्ष** संघाते; **त्वक्ष** त्वचने।। ६६८

१४३. परिग्रहे **पक्ष** केचिद्; आदरे **सूर्क्ष** संस्मृतः। ६७०
काङ्क्षायां स्युः **कक्षि वक्षि मक्षयो**; घोरवाशिते।। ६७३

१४४. **द्राक्षि ध्राक्षि ध्वाक्षि** मताः; **चूष** पाने तु संस्मृतः। ६७७
**तूष** तुष्टौ; **पूष** वृद्धौ; **मूष** स्तेयार्थको मतः।। ६८०

१४५. **लूष रूष** च भूषायां; **शूष** स्यात् प्रसवार्थकः। ६८३
**यूष जूष** च हिंसायां; **भूष** तु स्यादलंकृतौ।। ६८६

१४६. रुजायाम् **ऊष** तु प्रोक्तः; **ईष** उञ्छे प्रकीर्तितः। ६८८
**कष खष शिष जष झष शष वष मष**।। ६९६

१४७. **रुष** **रिष** च हिंसार्था; भर्त्सने **भष** ईरितः। ६९९
**उष** दाहे; **जिषु** **विषु** **मिषु** स्युः सेचने त्रयः।। ७०३

१४८. **पुषा**;थ पुष्टौ दाहे स्युः **श्रिषु** **श्लिषु** **प्रुषु** **प्लुषु**। ७०४
सेके **पृषु** **वृषु** **मृषु** सहनेऽपि **मृषु** स्मृतः।। ७०८

१४९. संक्लेशने च हिंसायामितरौ च प्रकीर्तितौ।
संघर्षे **घृष्व** (**घृषु**(**षु**+**अ**)); लीके तु **हृषु**; शब्दे **तुस** **ह्रस**।।
७१२

१५०. तत्रैव च **ह्लस** **रस**; क्रीडने श्लेषणे **लस**। ७१५
**घसॢ** स्याददने, **जर्ज** **चर्ज** **झर्झ** च तर्जने।। ७१९

१५१. परिभाषाहिंसयोश्च; **पिसृ** **पेसृ** गतौ मतौ। ७२१
हसने तु **हसे** प्रोक्तः समाधौ **णिश** कीर्तितः।। ७२३

१५२. शब्दे रोषकृते चैव प्रोक्तौ **मिश** तथा **मश**। ७२५
गतौ **शव**; प्लुतगतौ **शश**; हिंसार्थकः **शसु**।। ७२८

१५३. **शंसु** स्तुतौ दुर्गतौ च; **चह** स्यात् परिकल्कने। ७३०
पूजायां **मह** तु; त्यागे **रह** स्यात्तु; गतौ **रहि**।। ७३३

१५४. **दृह** **दृहि** **बृह** **बृहि** वृद्धौ, शब्देऽपि चान्तिमः। ७३७
**बृहिर्** चान्ये; **तुहिर्** **दुहिर्** **उहिर्** एते त्रयोऽर्दने।। ७४०

१५५. पूजायामर्ह तु प्रोक्तः **परस्मैपदिनो गताः**। ७४१

## द्वाविंशतिः (२२) आत्मनेपदिनः

**द्वाविंशतिर्द्युताद्याश्चात्मनेभाषा इमे मताः**॥

१५६. **द्युत** दीप्तौ; **श्विता** वर्णे स्नेहने च **मिदा** मतः। ७४४
स्नेहने मोचने च स्यात् **ञिष्विदा ञिक्ष्विदाथवा**॥ ७४५

१५७. **रुच** दीप्तौ अभिप्रीतौ; **घुट** स्यात् परिवर्तने। ७४७
प्रतिघाते **रुट लुट लुठाः**; दीप्तौ **शुभ** स्मृतः॥ ७५१

१५८. **क्षुभ** संचलने; हिंसार्थकौ **णभ तुभौ** उभौ। ७५४
**स्रंसु ध्वंसु भ्रंसु** चावस्रंसने **भ्रंशु** केचन॥ ७५८

१५९. विश्वासे **स्रम्भु**; **वृतु** तु वर्तने; **वृधु** वर्धने। ७६१
**शृधु** स्यात् शब्दकुत्सायां; **स्यन्दू** प्रस्रवणे मतः॥ ७६३

## त्रयोदश (१३) आत्मनेपदिनः

१६०. **त्रयोदश घटाद्याश्चाप्यात्मनेपदधातवः**।
चेष्टायां तु **घट** प्रोक्तः, भये संचलने **व्यथ**॥ ७६५

१६१. प्रख्याने **प्रथ**; विस्तारे **प्रस**; **म्रद** तु मर्दने। ७६८
**स्खद** विद्रावणे प्रोक्तः; **क्षजि** स्यात् गतिदानयोः॥ ७७०

१६२. गति हिंसनयोः **दक्ष**; कृपायां च गतौ **क्रप**। ७७२
**वदि** **क्रदि** **क्लदि** प्रोक्ता वैक्लव्ये धातवस्त्रयः।। ७७५

१६३. **ञि** **त्वरा** संभ्रमेऽथेमे **परस्मैपदधातवः**। ७७६

**पञ्चचत्वारिंशत् (४५) परस्मैपदिनः**

**ज्वर** रोगे; सेचने तु **गड**; **हेड** तु वेष्टने।। ७७९

१६४. धातू **वट** **भट** प्रोक्तौ परिभाषणवाचकौ। ७८१
**णट** नृत्तौ; प्रतीघाते **ष्टक**; तृप्तौ **चक** स्मृतः।। ७८४

१६५. हसने च **कख** प्रोक्तः; शङ्कायां च **रगे** मतः। ७८६
**नगे** संगे; संवरणे **ह्रगे** **ह्लगे** **षगे** **ष्टगे**।। ७९१

१६६. **कगे** तु नोच्यतेऽस्यार्थः; कुटिलायां गतौ **अक**। ७९३
**नोच्यते = क्रियासामान्यार्थत्वात्, अनेकार्थत्वाद्वा**।।
**अगा**त्रैव(अग+अत्रैव); **कण** **रण** गतौ; **चण** **शण** **श्रणाः**।।
७९९

१६७. दाने च स्युः; **शण** गतावित्यन्येऽथ **श्रथ** **श्लथ**। ८०२
**क्रथ** **क्लथ** च हिंसार्थाः **वना**पि **वनु** नोच्यते।। ८०५

१६८. **ज्वल** दीप्तौ तु; चलने **ह्वल** **ह्मल** च कीर्तितौ। ८०८
आध्याने **स्मृ**; भये **दॄ**; **नॄ** नये; **श्रा** पाक ईरितः।। ८१२

१६९. **ज्ञा** मारणे तोषणे च निशाने वा निशामने। ८१३
**चलि**स्तु कम्पने प्रोक्तः; ऊर्जने **छदि**रीरितः।। ८१५

१७०. **लडि**स्तु जिह्वोन्मथने; हर्षग्लेपनयोः **मदी**। ८१७
**ध्वन** धातुस्तु शब्दे स्यात्; **स्वन** स्यादवतंसने।। ८१९

१७१. गतौ **फण**; मितः प्रोक्ता घटाद्या धातवः समे। ८२०
**राज़ृ**भयपदी (राजृ +उ) दीप्तौ **आत्मनेपदिनस्त्रयः**।। ८२१

**त्रयः (३) आत्मनेपदिनः**

१७२. **टुभ्राजृ टु भ्राशृ** तथा दीप्तौ **टुम्लाशृ** कीर्तिताः। ८२४

**पञ्चविंशतिः (२५) परस्मैपदिनः**

**परस्मैपदिनोऽथैते** शब्दे **स्यमु स्वन ध्वन**।। ८२६

१७३. **षम ष्टमा**ऽप्यवैकल्ये दीप्तौ तु **ज्वल** ईरितः। ८२९
कम्पने **चल**; **जल** तु घातनेऽथ **टल ट्वल**।। ८३३

१७४. **वैक्लव्ये**ऽथ **ष्ठल** स्थाने; **हल** तु स्याद्विलेखने। ८३५
**णल** गन्धे बन्धने वा गतौ तु **पल** कीर्तितः।। ८३७

१७५. धान्यावरोधने चापि; प्राणने च **बल** स्मृतः। ८३९
महत्त्वे **पुल**; संस्त्याने बन्धुष्वपि **कुल** स्मृतः।। ८४१

१७६. **शल हुल पत्** गतौ; निष्पाके तु **क्वथे** मतः। ८४६
**पथे** गतौ; विलोडने **मथे**, तूद्गिरणे **टु वम्**।। ८४९

१७७. चलने तु **भ्रमु** प्रोक्तः; **क्षर** संचलने मतः। ८५१

## द्वौ (२) आत्मनेपदिनौ

अथानुदात्तावेतौ द्वौ आत्मनेपदिनौ स्मृतौ।।

१७८. मर्षणे तु **षह** प्रोक्तः क्रीडायां **रमु** चेरितः। ८५२

## सप्त (७) परस्मैपदिनः

**परस्मैपदिनः सप्त कसन्ताः परिकीर्तिताः।।**

१७९. गतौ विशरणे चावसादने **षद्‌ॡ** कीर्तितः। ८५३
**शद्‌ॡ** स्यात् शातने त्वर्थे; आह्वाने रोदने **क्रुश**।। ८५५

१८०. संपर्चने च कौटिल्ये प्रतिष्टम्भे विलेखने।
**कुच** प्रोक्तोऽ; वगमने **बुध**; अथो बीजजन्मनि।। ८५७

१८१. प्रादुर्भावे **रुह** प्रोक्तः; **कस** दीप्तावुदाहृतः। ८५९

## त्रिचत्वारिंशत् (४३) उभयपदिनः

**अथोभयपदित्वेन हिक्काद्या धातवः स्मृताः।।**

१८२. शब्देऽव्यक्ते **हिक्क**; गतौ याचने **चाञ्चु (अञ्चु)** संमतः। ८६१
**अचु** केचिदचीत्यन्ये धातुं निरदिशन्निमम्।।

१८३. याञ्चायां तु **टु याचृ** स्यात् **रेटृ** स्यात्परिभाषणे। ८६३
**चते चदे** याचने तु पर्याप्तौ **प्रोथृ** तु स्मृतः।। ८६६

१८४. मेधाहिंसनयोः **मिदृ मेदृ**; थान्तत्वमेतयोः। ८६८
धान्तत्वं च जगुः केचित्; **मेधृ** स्यात् संगमेऽपि च।। ८६९

१८५. कुत्सायां संनिकर्षे च **णिदृ णेदृ** स्मृतावुभौ। ८७१
उन्दने तु **शृधु मृधु**; **बुधिर्** स्यादवबोधने।। ८७४

१८६. निशामने उ **बुन्दिर्** स्यात्; **वेणृ** ज्ञाने निशामने। ८७६
वादित्रगहणे चिन्तागत्योश्च परिकीर्तितः।।

१८७. **वेनु** चाप्युच्यते कैश्चित्; **खनु** स्यादवदारणे। ८७५
आदान संवरणयोः **चीवृ**; **चायृ** निशामने।। ८८०

१८८. पूजायां च; **व्यय** गतौ; **दाशृ** दानेऽ; थ **भेषृ** तु। ८८३
भयगत्योः; **भ्रेषृ, भ्लेषृ** गत्यर्थौ; **अस** तु स्मृतः।। ८८६

१८९. गतिदीप्त्यादानवाची षान्तोऽप्ययमुदीरितः।
बाधने स्पर्शने प्रोक्तः **स्पश**; कान्तौ **लष** स्मृतः।। ८८८

१९०. भक्षणे **चष**, हिंसायां **छष** धातुरुदाहृतः। ८९०
**झष**ादाने संवरणे; **भ्रक्ष** **भ्लक्ष**ादने स्मृतौ।। ८९२

१९१. **भक्षे**ति केचित्; दाने स्याद् **दासृ**; मानेऽथ **माहृ** तु। ८९४
**गुहू** संवरणे; **श्रिञ्** स्यात् सेवायां भरणे तु **भृञ्**।। ८९७

१९२. हरणे **हृञ्**; धारणे **धृञ्**; प्रापणे **प्रीञ्** प्रकीर्तितः। ९००

## षट्चत्वारिंशत् (४६) परस्मैपदिनः

**परस्मैपदिनोऽजन्ताः षट्चत्वारिंशदीरिताः।।**

१९३. **धेट्** पाने; **ग्लै** **म्लै** तु हर्षक्षये **द्यै** न्यक्कृतौ स्मृतः। ९०४
**द्रै** स्वप्ने, **ध्रै** तु तृप्तौ; **ध्यै** चिन्तायां; **रै** तु शब्दने।। ९०८

१९४. शब्दसंघातयोः **स्त्यै** **ष्ट्यै**; खदने **खै** समीरितः। ९११
**क्षै** **जै** **षै** तु क्षये प्रोक्ताः; **कै** **गै** शब्दे प्रकीर्तितौ।। ९१६

१९५. **शै** **श्रै** पाकेऽथ **पै** **ओ** **वै** शोषणे; **ष्टै** च वेष्टने। ९२१
शोभायां वेष्टने च **ष्णै**; शोधने **दैप्** प्रकीर्तितः।। ९२३

१९६. पाने स्यात् **पा**;ऽथ गन्धोपादाने **घ्रा** धातुरीरितः। ९२५
शब्दाग्निसंयोगयोः **ध्मा**; **ष्ठा** निवृत्तौ गतेः स्मृतः।। ९२७

